# कृष्णधनम् _ विमुद्रीकरणम्

{संसद _ राज्यसभायाः कार्यवाही (शून्यकालः)}

चन्द्रगुप्तभारतीयः (२०१६)

द्वारपालौ — माननीयाः सभासदाः !
माननीयाः सभापतिमहोदयाः आगच्छन्तः सन्ति।

सभापतिमहोदयः — नमस्कारः ! नमो नमः ! नमो नमः ! नमस्कारः ! उपविशन्तु ! उपविशन्तु ! भवन्तः ..... कृपया ........ उपविशन्तु ! नैव .... नैव ... अधुना......नैव... उपविशन्तु !

( पक्षः प्रतिपक्षश्च परस्परं कोलाहलं, आरोपणं प्रत्यारोपणं कुर्वन्तः सन्ति )

प्रतिपक्षः _ 1 — माननीयाः सभापतिमहोदयाः ! पञ्चशतं सहस्रञ्च रूप्यकान्योपरि प्रतिबन्धम् अप्रशस्तमस्ति । वयम् अस्य प्रतिबन्धस्य विरुद्धे तिष्ठन् स्मः।

प्रतिपक्षः _ 2 — माननीयाः सभापतिमहोदयाः ! सर्वे जानन्ति यत् अनेन निर्णयेण जनाः कष्टैः पीडिताः सन्ति। ते स्वधनानि स्वीकर्तुं दीर्घातपि दीर्घ-पंक्त्यां ATM समक्षे, बैंक-समक्षे च पंक्तिबद्धाः सन्ति । जनतायाः कष्टमिदं सम्यक् नास्ति । कष्टप्रदमादेशोऽयं प्रतिसन्निवर्तयन्तु।

सर्वे प्रतिपक्षाः — प्रतिसन्निवर्तयन्तु ! प्रतिसन्निवर्तयन्तु ! आदेशोऽयं प्रतिसन्निवर्तयन्तु ! प्रतिसन्निवर्तयन्तु !

सभापतिमहोदयः — उपविशन्तु ! भवन्तः .... कृपया ..... उपविशन्तु ! नैव .... नैव ... अधुना......नैव... उपविशन्तु !

पक्षः _ 1 — माननीयाः सभापतिमहोदयाः ! अहं भवद्भिः माध्यमेन वक्तुमिच्छामि यत् कष्टमस्ति, सत्यं कष्टमस्ति, बहुकष्टमस्ति। परञ्च केषां कृते ? किम् , सामान्य-जनानां कृते ? नैव .. नैव.. सामान्य-जनानां कृते नैव। येषां पार्श्वे कृष्णधनम्, क्षम्यतां बहुकृष्णधनानि सन्ति , तेषां कृते निर्णयोऽयं कष्टप्रदं, न तु सामान्यजनानां कृते।

प्रतिपक्षः _ 3 — सभापतिमहोदयाः ! कष्टमिदं सामान्य-जनानां कृते एव अस्ति। ते ए.टी.एम. पूरतः, बैंक-पूरतः, डाकगृहं पूरतश्च दीर्घपङ्क्त्यां पङ्क्तिबद्धाः सन्ति। कष्टानि तु तेषां कृते एव सन्ति।

पक्षः _ 2 — माननीयाः सभापतिमहोदयाः ! जनाः पंक्त्यां , बहुदीर्घ-पंक्त्यां पक्तिबद्धाः सन्ति , स्वयमेव रुप्यानि कृते पंक्तिबद्धाः सन्ति , जानिमः वयम्, कष्टं त्वस्ति, परञ्च देशवर्धनाय एतादृशं कष्टं अपेक्षितम्।
यदि चलचित्र-दर्शनाय, जीयो-सीम-क्रीणार्थाय, रोडीज-ऑडिशनार्थाय, मेगा-सेल-कृतेऽपि च वयं स्वेच्छारूपेण तावत् दीर्घपंक्तिं स्वीकर्तुं शक्नुमः , तर्हि किं देशोन्नत्यार्थाय देशवर्धनाय च एतावत् कष्टं सोढुं न शक्नुमः ?

पक्षः _ 3 — माननीयाः सभापतिमहोदयाः ! अहं भवद्भिः माध्यमेन भारतीयजनान् सम्बोधितुमिच्छामि यत् सैनिकाः देशरक्षणाय देशवर्धनाय च सहर्षेण स्वप्राणान् प्रयच्छन्ति, अत्र तु देशवर्धनाय वयं केवलं पंक्त्यामेव स्मः। किं देशाय वयं एतावत् क्षणिक-दुःखमपि धारयितुं न शक्नुमः ?

प्रतिपक्षः_ 4 — अत्र ए.टी.एम. पूरतः, बैंक-पूरतः, डाकगृहं पूरतश्च पङ्क्त्यां वयं केवलं निर्धन-सामान्य-जनान् एव पश्यामः, धनिकान् धनाढ्यान् तु वयं पङ्क्त्यां कुत्रापि न पश्यामः। किं सर्वाधिकानि कृष्णधनानि निर्धनजानान् पार्श्वे एव सन्ति ?

पक्षः_ 4 केवलं धनिकजनान् एव नैव अपितु तान् सामान्यजनान् अपि वयं पङ्क्त्यां न पश्यामः, येषां पार्श्वे श्वेतधनं बैंक-मध्ये सन्ति अपि च ये सर्वकारं प्रति करं प्रयच्छन्ति। ते पङ्क्त्यां न सन्ति, यतोहि ते धनिकजनाः कर्गजरुप्याकानि धनानि च व्यवहारे न व्यवहरन्ति। ते ए.टी.एम. कार्ड, डेबिट-कार्ड, क्रेडिट-कार्ड, नेट-बैंकिंग, इत्यादयः साधनेन स्वकार्यानि सम्पादयन्ति। अतः, ते जनाः प्रतिबन्धस्य पूर्वमपि रुप्यकानां कृते ए.टी.एम. पूरतः, बैंक-पूरतः, डाकगृहं पूरतश्च पक्त्यां पूरतः तिष्ठन् न आसन् पुनश्च प्रतिबन्धस्योपरान्तं अपि ते पङ्क्त्यां तिष्ठन् न सन्ति। सामान्य-जनान् मूढार्थाय एव भवतः आक्षोऽस्त्यम्।

प्रतिपक्षः _ 5 माननीयाः सभापतिमहोदयाः ! भवद्भिः माध्यमेन अहं प्रष्टुमिच्छामि यत्, कथं , कथं पञ्चशतं सहस्रञ्च रूप्यकान्योपरि प्रतिबन्धेन कृष्णधनं प्रत्यागमिष्यति ? निर्णयोऽयं केवलं भ्रान्तिवर्धकोऽस्ति। सामान्यजनानां कृते असुविधाजनकं निर्णयं प्रतिसन्निवर्तयन्तु।

पक्षः _ 5 माननीयाः सभापतिमहोदयाः ! कृष्णधनस्य सम्प्राप्ताय पञ्चशतं सहस्रञ्च रूप्यकान्योपरि प्रतिबन्धम् अत्यन्तावश्यकमस्ति। धनीजनाः कृष्णधन-निधाय स्वदेशस्य वर्धनार्थं करं न प्रयच्छन्ति। कथं राष्ट्रस्य विकासो भवति?

पक्षः _ 6 यर्हि देशस्य वित्तकोषे धनस्याभावः भविष्यति तर्हि कथं स्वदेशः प्रगति-पथं प्रयाति ? कथं राष्ट्र-ऋणनिर्मुक्तो भविष्यति ? कथं शिक्षित-युवानां कृते रोजगारस्यावसराः आयन्ति ? कथञ्च मार्गनिर्माणं, कथं विद्यालय-महाविद्यालय-विश्वविद्यालयानं निर्माणं, कथञ्च चिकित्सालयानं निर्माणञ्च भविष्यति? अपि च कथं राष्ट्रस्योन्नतिः भविष्यति? अतः निर्णयोऽयं राष्ट्रहिताय जनहिताय च वर्तते।

पक्षः _ 7 माननीयाः सभापतिमहोदयाः ! स्वदेशवर्धनाय राष्ट्रोन्नतये देशहिताय जनहिताय च कृष्णधनस्योपरि प्रतिबन्धं अत्यावश्यकं वर्तते। माह-द्विमाह-कृते कष्टं त्वस्त्येव , परञ्च भविष्य-साफल्यार्थाय कष्टमिदं वहनीयमेव। न कोऽपि अन्यः उपायः।

भवद्भिः माध्यमेन जनान् ज्ञापयामि यत् – भविष्यं चिन्तयन्तु, बालकान् बालिकाश्च भविष्य-विषये चिन्तयन्तु , यदि राष्ट्रकोषे धनमेव न भविष्यति, कथं ते रोजगारं प्रप्स्यन्ति ? अपि च कथं ते स्वजीवनोपार्जनं करिष्यन्ति ? राष्ट्रकोषाभावात्, दश-पञ्चदश-वर्षानन्तरं तेऽपि "शिक्षित-बेरोजगार" इति श्रेण्यां आगमिष्यन्ति।

अतः चिन्तयन्तु , कृपया विचारयन्तु। अनुरोधयामि , स्वभविष्यस्य, स्वबालकान् बालिकाश्च भविष्यस्य, स्वदेशस्य भविष्यस्यविषये कृपया विचारयित्वा निर्णयं स्वीकुर्वन्तु।

प्रतिपक्षः _ 6 नैव नैव ... अधुना वर्त्तमाने देशः कष्टैः पीडिताः अस्ति , भवन्तः आदर्शवाक्यैः जनतां प्रलोभन्ति। भविष्यं कः जानाति, किं भविष्यति , परञ्च अधुना तु जनाः त्राहि मां , त्राहि मामेव कुर्वन्ति।

पक्षः _ 8 क्षम्यताम्। परञ्च अहं पुनः वक्तुमिच्छामि यत् जनाः अपि च सामान्यजनाः त्राहि मां त्राहि मां न कुर्वन्ति, कृष्णधनोपासकजनाः, कृष्णधनसेवकाः, सामान्यजनस्य धनस्य धनहारकाः जनाः त्राहि मां त्राहि मां कुर्वन्ति। तोषां कृते कः उपायः !!!!

प्रतिपक्षः _ 7 ते सर्वे जनाः, येषां पार्श्वे पञ्चशतं सहस्रञ्च रूप्यकानि सन्ति , किं तानि रूप्यकानि कृष्णधनानि सन्ति? नैव ... नैव ...... भवतः निर्णयः असमीचीनमस्ति। कृपया स्वनिर्णयं प्रतिसन्निवर्तयन्तु।

पक्षः _ 9 पञ्चाशत्दिवसाः सान्ति तेषां कृते। किमर्थं प्रमत्तप्रलापं कुर्वन्ति भवन्तः।

सर्वे प्रतिपक्षाः नहि नहि । पञ्चदशदिवसाः तेषां कृते पर्याप्ताः सन्ति । स्वनिर्णयं प्रतिसन्निवर्तयन्तु ।

(पक्षः प्रतिपक्षश्च पुनः परस्परं कोलाहलं, आरापणं प्रत्यारोपणं कुर्वन्ति)

सभावतिमहोदयः उपविशन्तु ! भवन्तः .... कृपया ..... उपविशन्तु ! नैव .... नैव ... अधुना......नैव... उपविशन्तु ! (बहुकोलाहलं भवति) यदि अनेन भवन्तः कोलाहलं करिष्यन्ति तर्हि कार्यवाही अधिकं न भवितुं शक्नेति। (किञ्चित क्षणोपरानतमपि कलकलः शान्तः न भवति, तदा सभापतिमहोदयः वदति) अस्तु तर्हि कार्यवाहीं अत्रैव स्थापयामः । (इत्युक्त्वा सभापतिमहोदयः बहिर् प्रयाति, नाटिकायाः समापनमपि अनेन कथनेन सह भवति ।)

द्वारपालौ माननीयाः सभासदाः! अद्यतनस्य कार्यवाही अत्रैव समाप्तो भवति । धन्यवादाः !

इति चन्द्रगुप्तभारतीयेन २०७३ विक्रमसम्वत्सरे (२०१६ खिस्ताब्दे) लिखिता

**"कृष्णधनम्_विमुद्रीकरणम्"**

नामधेया संस्कृतलघुनाटिका समाप्ता ।